॥ श्रीः ॥

श्रीमच्छङ्कराचार्य प्रणीतं ।

# गोविंदाष्टकम्

आनन्दगिरिकृत टिप्पण सहितं

और

मुकुन्दमाला व रास क्रीडा स्तोत्र सहितम् ।

कश्मीर देशवासी माधवभायों ने छपवाया ।

सन् १९१५ ई० ।

पञ्जाब एकानोमीकल यन्त्रालय लाहौरमें प्रिण्टर लाला लालमन के अधिकार से छपा ।

# प्रस्तावना।



इस भारतवर्ष नाम कर्म भूमि में चार वर्णों वाले मनुष्यों के साधने योग्य जो धर्म,अर्थ,काम, मोक्ष इस चतुर्विध पुरुषार्थ का मूल केवल धर्महो है मनुष्य उस धर्म को कलियुगमें पाप कर्म करने से अच्छे प्रकार से नहीं करसक्ते हैं यद्यपि तथापि (कलौमुच्येतकीर्तनात्)कलियुगमें हरि कीर्तन करने से मुक्त होते हैं इस शास्त्र विधि से केवल हरि कीर्तन से ही चतुर्विध पुरुषार्थ की सिद्धि होती है । इसलिये हरि कीर्तन नामक श्री शंकराचार्य जी ने गोविन्दाष्टक स्तोत्र

बनाया है यह स्तोत्र आनन्द गिरि कृत टिप्पण सहित है और "मुकन्दमाला नाम स्तोत्र" जो वृहत्स्तोत्र रत्नाकर में अभी तक सम्पूर्ण किसी ने नहीं लिखा अतः वह भी इसके साथ ही छपवाया जाता है यह मुकुन्दमाला स्तोत्र भक्ति रस पूर्ण है प्रेम का बढ़ाने वाला है । और तीसरा रास क्रीड़ा स्तोत्र भी साथ छपवाया है जिसके पढ़ने से साक्षात् श्रीकृष्णचन्द्र जी में प्रेम उत्पन्न होता है। यह तीनों स्तोत्र हरि प्रेमके बढ़ाने वाले हैं । और यद्यपि गोवि-न्दाष्टक नाम स्तोत्र छप चुका है तथापि उसकी टीका पूर्ण नहीं थी फिर इस स्तोत्र की पूर्ण टीका काश्मीर प्रदेश से मिली है

यह आदर्श उत्तम है और सर्वथा पूर्ण है अतः इस आदर्श के अनुसार इसको प्रकाशित किया जाता है ॥

काश्मीर देशवासी माधवभायो ।

# गोविन्दाष्टकम्

ॐश्रीगणेशाय नमोनमः । श्रीकृष्णाय नमः ॥ इह खलु सकल लोक हितावतारो भगवान्महाविष्णुः भूवनितयाभ्यर्थितो भूभारपरिजिहीर्षयायदुकुले किलावतीर्णस्सनकादि मनिजनैरनुदिनमनुगीयमानसच्चरितो भगवान्नंदवेश्मनिविजहार तमेव विहारमष्टाभिः श्लोकैः सत्यमित्यादिभिरुप वर्णयन् भगवत्पूज्यपादमुनिर्निरस्तसमस्त विशेषं सच्चिदानंदाद्वयं परमात्मान मभिष्टौति सत्यमिति ॥

सत्यंज्ञानमनन्तं नित्यम-
नाकाशंपरमाकाशं गोष्टप्राङ्ग
णरिङ्गणलोलमनायासं पर-
मायासं मायाकल्पित नाना
कारमनाकारंभुवनाकारंक्ष्मा
मानाथमनाथं प्रणमतगोवि
न्दं परमानंदम् ॥ १ ॥

परमश्चासावानन्दश्चेति परमानन्दस्तं
निरतिशयानन्दं गोभिर्गीर्भिस्तत्वमस्यादि
वाक्यैर्विंदते उपलभ्यइति गोविन्दस्तं प्रण-
मत प्रकर्षेण भक्तिश्रद्धातिशयेन नमत वाङ्
मनः कायैरर्चयत अर्चनायां किं फलमित्य-

कांक्षायां परमेश्वरप्रसादेन सत्यज्ञानादि लक्षण परमार्थ प्राप्तिरेवमुख्यंफलमित्यभिप्रेत्यतंविशिनष्टि सत्यमिति । सत्यमवाध्यं शुक्तिकादावारोपितस्य रजतादेः विवेक ज्ञानेनबाध्यत्वं नतथाबाध्यत्वमस्य अकल्पितत्वात् रूपान्तरप्राप्त्य भावाच्च नन्वस्य सत्यत्वे प्रमाणमस्तिनवाअस्तिचे त्तद्विषयत्वेन घटादिवद्विषयत्व मापद्येत । नास्तिचेत्तत्कथं सत्यत्व सिद्धिरित्याशंक्य परमात्मनः स्वयं प्रकाशत्वात् सत्यत्व मित्यभिप्रायेण तं विशिनष्टि ॥

ज्ञानमिति विज्ञानं ब्रह्म सत्यं ज्ञानमनंतं ब्रह्मेति श्रुतेः । ज्ञप्ति मात्र विग्रह मतएव स्वयं प्रभ मित्यर्थः सत्यत्वाज्ज्ञानत्वाच्च

नंत मंतः सीमा इयत्ता न विद्यते यस्य सोऽ
नंतः तं देशतः काल तो वस्तुतो प्यपरिच्छि
न्नं नता वद्देशतः परिच्छिद्यते । यच्चकिंचि
ज्जगत्यस्मिन्दृश्यते श्रूयतेपिवा अंतर्बहि
श्च तत्सर्वं व्याप्यनारायणः स्थितः । इति
परमात्मन स्सर्वग तत्वावगमात् ॥ नच का-
लतः परिच्छिद्यते न जायते म्रियतेवा कदा
चित् इत्यात्मनो जन्म विनाश प्रतिषेधः ना
पिवस्ततः परिच्छिद्यते अस्य निखिलो पादा-
नत्वन स्वव्यतिरिक्त वस्त्वंतरा भावात्
आदावंतेच यन्नास्ति वर्तमानेपि तत्तथेति
न्यायात् तस्मादनाद्य विद्या कल्पितस्य
निखिल द्वैतस्य रजु सर्पादि वद्दृश्यत्वेना
धिष्ठान मात्रा रब्धत्वात् अतएव नित्यम

विनाशिनं नित्यं विभुमिति श्रुतेः अविना-
शितुत द्धिद्धि येनसर्व मिदं तत मितिस्मृते-
श्च सर्वदा विद्यमानम् इत्यर्थः। ननु नित्य-
स्याकाशादे स्ताव दात्मनः सकाशा दुत्पत्ति
श्रवणा दनित्य त्व मेवं नित्यस्याप्यात्मनो-
ऽनित्यत्वंस्या दित्याशंकच तस्यचा काशादि
विलक्षणत्वेन जन्माद्यभावा न्नित्यत्वं सु-
स्थितमित्या शयेनाह। नाकाशमि मिति
अतमो वय्वाद्यना काशमितिश्रुतेः आकाशा
द्यतिरिक्त स्तत्सं गरहितत्वाच्चेत्यर्थः॥

जन्मादि षडभाव विलक्षण त्वादेव पर-
माकाश आसमंतात्काशत इत्याकाशः पर
माऽचा सावाकाशश्चेति परमाकाश स्तं पर
माकाश मित्यर्थः येन सूर्य स्तपति तेज-

सेद्ध स्तमेव भांतमनुभाति सर्वमिति श्रुतेः ।
ज्योतिषा मपि तज्ज्योति रितिस्मृतेश्च
एवं तत्पदतया भिष्टुत्य त्वंपद तया भिष्टौ
ति । गोष्ठ प्राङ्गणेति । गावः श्रोत्रा दीनी
न्द्रियाणि तिष्ठंत्यस्मिन्निति गोष्टश्चिद
धिष्ठितो ऽहंकारः स एवास्य प्रांगणम भि-
व्यक्ति स्थानं नृत्यरंगो वात्ररिंगणं स्खलनं
कार्य कारण संघातप्रेरकत्वं अतएव लोलं
आत्मनितिष्टन्नात्मानमन्तरो यम यती-
ति श्रुते रीश्वरः सर्वभूताना मितिभगवद्व-
चनाच्च कार्यकारण संघात प्रेरकत्वेन लोल
मित्यर्थः । तर्हिप्रेरकत्वेना यासयुक्त मित्या
शंक्याह । अनायास मिति । अयस्कांत
वत्सं निधिमात्रेण प्रेरकत्वेनायासरहितमि-

स्यर्थः ॥ तथा बुद्धिधर्माध्यासेनपरमायासं नन्वेक स्मिन्नेतदुभयं कथं घटत इत्या कांक्षाया मस्य माया मयत्वा न्नायंदोषः इत्याशयवानाह ॥ माया कल्पित इति । अघटन घटनापटीय सीमाया तया कल्पितो नानाकारः नानाकारं शरीरं भोगायतनं यस्य सतथोक्त स्तं शरीरादेः माया निबंधनत्वात्तन्नि बंधनमायासोपि तथा विध इत्यर्थः ननु नाना कारश्चेत्कथ मनाकारत्वं परास्य शक्ति र्विविधैव श्रूयते इत्यादिश्रुतेः स्वत-स्त्वनाकारत्वं (नतस्य कार्यं करणं च विद्यते) इत्याह अनाकारं अशरी वाव संत मित्यादि श्रुतेः । शरीर भोगराहित्य श्रवणात् नित्य मुक्तमित्यर्थः । नन्वानाकार इचेत्कथं-

ह्माद्याः स्थावरांताः प्राणिनो मम वपुः स्मृता इति वेदांत वाक्यं संगच्छत इत्यंत आह भुवनाकार मिति। भुवनं मायामय माकारो यस्य सतथोक्त स्तम्। सर्वत्रास्ते सर्वशरीरी इति भगवत्पादवचनाद पीत्यर्थः परास्य शक्ति र्विवि धैवश्रूयते स्वाभाविकी ज्ञानबल क्रियाचेति ॥ क्ष्मा मानाथ मिति। क्ष्मा भूमिः मालक्ष्मीः तयोर्नाथं स्वयमनाथं स्वतन्त्र मित्यर्थः स्वतंत्रमेव प्रपंचयति परंमिति। आनंदो ब्रह्म अयमात्मा ब्रह्मेति श्रुतेः। परमानन्द मुपमानरहित मानदंगोविन्दमानदं प्रणम तेत्यर्थः ॥ १ ॥ मातृमान्पितृमा नाचार्यवां पुरुषो वेदेतिश्रुतेः तस्य मातृ शिक्षितत्वं दर्शयति। मृत्स्नेति ॥

मृत्स्नामत्सीहेतियशोदा
ताडन शैशव संत्रासं व्यादित-
वक्त्रालोकित लोका लो-
कचतुर्दशलोकालिम् । लोक
त्रयपुर मूलस्तंभंलोकालोक
मनालोकं लोकेशं परमेशं प्र-
णमतगोविन्दंपरमानन्दम् ।२

हे कृष्ण इहास्मिन्मन्दिरे क्षीरादि भो-
गाढ्ये मृत्तिकां किमर्थं मत्सीति भक्षयसि
यशोदाकर्तृकं ताडनं तस्मिन्समये शैशवः
शिशुत्वसंबंधी संत्रासो भीतिर्यस्य सत्वोक्त

स्तंबालवद्भीतमित्यर्थः मृद्भक्षणापराध परि-
हाराय मात्रे विश्वरूपं दर्शितवानित्याह।
व्यादितेत्यादि व्यादितं प्रसारितं यद्वक्त्रं
तस्मिन्ना लोकिता दर्शिता लोका लोकचतु
र्दशलोकानामलिः पंक्तिर्येन स तथोक्तस्तं।
लोक्यंत इति लोकाः पृथिव्यादयः सप्त
नलोक्यंतेस्माभि रित्यलोकास्ते तल वित-
लादयः सप्त एवं चतुर्दश लोका किंच।
लोकत्रय पुर मूलस्तं भमिति। लोकानां भु-
वनानां त्रयं लोकत्रयं तदेवपुरं तस्य मूलस्त
भं स्थिति हेतुमित्यर्थः यदादित्य गतं तेजो
इत्यादिभगवद्वचनात्। लोका लोक मिति।
लोकः आब्रह्मस्तंभपर्यंतः आलोक्यते प्रका-
शतेयेन सलोकालोकस्तं। स्वयमनालोकम्।

लोकांतर रहितं अन्यथानवस्था प्रसज्येत्। भीषास्मा द्वातः पवत इति श्रुतेः। लोकानां वाय्वा दीनामीशं शास्तारं वातादयो महा वीर्याःस्वतंत्रावीर्यशालिनःतेपिभीता प्रवर्तंते ब्रह्मणोपि भयंमत्त इतिदेवेश्वरवचनात्। किंच परमेशं परमा इंद्रादिभ्योप्युत्कृष्टा ब्रह्मादयः तेषामपीशं योब्रह्माणं विदधाति पूर्वं मिति ब्रह्मदीन्प्रत्युप देष्टत्वश्रवणात सर्वज्ञं सर्वेश्वरं चेत्यर्थः ॥ २ ॥

सर्वेश्वरत्वमेवोपपादयति त्रैविष्टेति।

त्रै विष्टप रिपु वीरघ्नं क्षि-
तिभारघ्नं भवरोगघ्नं कैवल्यं
नवनीताहार मनाहारं भुव-

नाहारम् । वैमल्य स्फुट चेतो
वृत्ति विशेषाभासमनाभासं
शैवं केवलशांतं प्रणमत गोविंदं
परमानन्दम् ॥ ३ ॥

त्रैलोक्य वासिन स्तेषांरिपवः शत्रवो दानवा स्तेषुयेवीराः शूरा स्तान्रावणादीन् हंतिति त्रैविष्ट परिपुवीरघ्नं । क्षिति भारघ्न मिति । दुष्टसंहरणेन क्षितिभारंहंतीति । नन्वेतावता कथं निःशेषानर्थ निवृत्तिर्लोकस्येत्ये तदाह । भवरोग घ्नमिति भवरोगं संसाररोगं हन्ति नाशयति तत्र हेतुमाह कैवल्यमिति । महावाक्य श्रवण मनन नि-

दिध्यासनेन अज्ञान तत्कार्य निवृत्तौ निरति शया नंदा वाप्ति कैवल्य प्रदमित्यर्थः नवनी ताहारं नवेन नूतनेन शरीरेण नीतं प्रापितं विषयजात माहारो यस्यतम् अध्यारोपाव स्थायांभोक्तारं भुवनाहारं। अभोक्ता भुवनं नाम रूपात्मकं जगदस्याहरं चिमात्रा वशेषं यस्य सतथोक्तः तर्हि कीदृग्विधः केन प्रका- रेण कुत उपलब्धं शक्यते इत्या कांक्षायां निष्कल्मषबुद्धौश्रुत्याचार्य प्रसादेनेत्याह । वैमल्ये नरागादि राहित्येनस्फुटाववोधेसा- क्षात् या चेतो वृत्ति स्तस्यां विशेषेणा परोक्षतया आभा सो यस्यतं। तर्हिबुद्धि ग्राह्यत्वेन जडत्वप्रसंग इत्यत आह। अना- भासमिति । यस्यामतं तस्यमत मित्यादि

श्रुतेः। दृश्यत्व निषेधाद्विषयतया भासोभा नंनविद्यते यस्या सावनाभासः। नतत्र च क्षुः गच्छति नवागगच्छति नोमन इतिश्रुते श्चक्षुरादीना मगोचरत्वा त्स्वतः स्फुर ती- त्यर्थः अतएव शैवं शिवं भद्रं निरुप द्रवमि त्यर्थः। तत्रहेतुः केवल शांतं साक्षी चेता केवलो निर्गुणश्चेति श्रुतेः केवल चिन्मात्रा वशेषतया शांत मुपशांतसंसार भ्रम मित्य- र्थः यत्रत्वस्य सर्वमात्मैवा भूत्तत्केनकं पश्ये दिति श्रुतेः मुक्तावस्थायां दर्शन क्रिया शून्यत्वात्केवल चिद्रूप मितिभावः॥ ३॥ ननुकैवल्य चिद्रूपत्वे कथंभक्तानुग्राहकत्व मितिचेन्नैवं अस्याप्यचिंत्यशक्ति मत्वेन।

स्वेच्छा विहारा स्लोकवतुलीलाकैवल्यमितिन्यायाश्चेत्याह गोपालमिति ॥

गोपालं प्रभुलीला विग्रह
गोपालं कुल गोपालं गोपीखे
लन गोवर्धन धृतिलीला ला
लितगोपालं। गोभिर्निगदित
गोविन्दस्फुटनामानं बहुना-
मानं गोधीगोचरदूरं प्रणमत
गोविंदंपरमानंदम् ॥ ४ ॥

गोपवेशेणगाः पशून पालयति इति गो-

पालं स्तं । प्रभुलीला विग्रह गोपाल मिति ।
प्रभुः कर्त्तुमकर्तुमन्यथा कर्तुं समर्थत्वात् त-
स्मादेव लीलया स्वेच्छा शक्त्या परिग्रहीतो
देहस्तेन गांवेदं तन्मूल यज्ञादिकं च पाल
यतीति स तथोक्तस्तं । कुलगोपाल मिति ॥
कौ भूमौ लीयत इति कुलंशरीरं तश्च
गाश्चेन्द्रियाणि पाल यतीति कुल गोपालस्तं
सुषुप्ति मूर्छादौ मृत इति भ्रांति परिहाराय
प्राणेन सह शरीरा दिरक्षक इत्यर्थः गोपीखे
लन गोवर्धनेति । गोपीभिः सह विहरणं तद
र्थं वनप्रांते प्रतिवृष्टि संनिवारणाय गोवर्धन
गिरिधृतिकारि सैवलीला तस्या अयत्न
साध्यत्वात्तथा । लीलयालालिताः गोपाला
येन सतथोक्तस्तं गोभिर्वेदांतै र्निगदितं गो-

विन्देति स्फुटं प्रसिद्धं नाम यस्य सः गोभि
र्निगदित गोविन्दस्फुट नामानं। बहुनामानं
बहूनि असंख्यानि नामानि परस्यब्रह्मणो
हरेरिति पुराण वचनादऽसंख्यात नामान
मित्यर्थः तर्हिनाम रूप संबंधाद संगतत्व
हारित्यत्राह गोधीत्यादियतोवाचो निवर्तन्ते
अप्राप्य मनसा सहेति श्रुतेः गोगोचराद्वा
ग्गोचराद्धी गोचराश्च दूरं निर्गुणे निष्कले
परमानंद चिद्रूपे ब्रह्मणि शब्दप्रवृत्ति निमि-
त्तानां जातिगुण रूपा दीना मसंभवादवां
मनसगम्य मित्यर्थः ॥ २ ॥ ननु वाङ्मनोऽग
म्यत्वे तंत्वौपनिषदंपुरुषं पृच्छामीत्युपनि-
षद्वेद्यत्वंकथं घटते त्याशंक्य आत्मन्य विद्या

ध्यारोपित तत्तद्धर्म निरसन मुखेन तत्पूर्व

या कथंचित्प्रति पादकाभि प्रायेण तथोक्त मित्याशयेनाह ॥ गोपीति ।

गोपीमण्डलगोष्ठीभेदंभेदा
वस्थमभेदाभं शश्वद्गोखुर
निर्धूतोद्धृतधूली धूसरसौ-
भाग्यं । श्रद्धाभक्ति गृहीतान
न्दमचिन्त्यंचिन्तित सद्भावं
चिंतामणि मणिमाणं प्रणमत
गोविन्दं परमानन्दम् ॥ ५ ॥

गोपीनां मंडलं समूहस्तेनसहगोष्टीभेदं क्रीडाविशेषोयस्य सतथोक्तंः रासक्रीडा-

रतमित्यर्थः अतएव भेदावस्थं भेदेनावति-ष्टतइति भेदावस्थं "रूपंरूपं प्रतिरूपोबभूवेतिश्रुतेः" अनेकोपाधिवशादनेकरूपमित्यर्थः स्वतस्त्व भेदाभं अभेदाभानंयस्यसतथोक्तस्तं शश्वदनवरतं गवांखुरेण चरणेन निर्धूतानितरां कम्पिता उद्धृताच या धूलिः रजः पटलिकातया धूसरमीषत्पांडुरं तदेव सौभाग्यं रूप लावण्यं यस्य सत थोक्तस्तं। तदुक्तं। (शृणुसखिकौतुकमेकं। नन्दनिकेतांगनेमयादृष्टं। गोधूलिधूसरांगोनृत्यति वेदान्तसिद्धान्तः) ॥ इति ॥ सकथं लभ्यते। श्रद्धाभक्तीति। श्रद्धत्स्वसौम्य। अज्ञश्चा श्रद्धधानश्चेति भक्त्यामामभिजानाति न त्यपइनिषस्मृतिवचनात् श्रद्धाभक्ति

भ्यां कैश्चिद्गृहीतानन्दं मुक्तानां निर्वाण सुखमित्यर्थः तर्हि तद्ग्राह्यत्वेन घटवज्जडत्व प्राप्ति रित्याशंक्याह अचिंत्य मिति मन-सोप्यविषयमित्यर्थः अव्यक्तोयमचिन्त्योय मिति अयंस्वविषयश्चे न्नास्त्येव शशविषा णवदित्यतआह चिन्तित सद्भावमिति। यतो वाइमानि भूतानि जायन्ते येन जातानिजी-वंतियत्प्रयंत्यभिसविशन्ति तद्विजिज्ञासस्व-तद्ब्रह्मेतिकोह्येवान्यात्कःप्राण्याद्यदेषाकाश आनन्दोनस्यात् चिन्त्यतोनिश्चितःसद्भावः सतायस्य सतथोक्तस्तं चिन्त्यतसद्भावादेव चिन्तामणि चिन्तामणिर्यवद्वञ्चिन्तितंद-दातीतितद्वद्यमपिचिन्तामणिः ( आयुरा-रोग्यमर्थांश्चभोगांश्चैवानुषंगिकान् ददाति

ध्यायिनांनित्यंसर्वकामप्रदोहरिरिति) वच-नाद्वांछितप्रदमित्यर्थः । अणोरणीयानिति श्रुतेःअणिमाणं सूक्ष्मादपि सूक्ष्म मप्रतर्क्य मित्यर्थः॥५॥ जक्षन् क्रीडन् रममाणः स्त्रीभिः यानैर्वेतिश्रुतेरस्यजीवन्मुक्त वल्लीलां दर्शयति ॥ स्नानेति ॥

स्नानव्याकुल योषिद्वस्त्रा
न्यादा यागमुपारूढं व्यादि
त्संतीरथदिग्वस्त्रावस्त्रंदातु
उपाकर्षन्तन्ताः । निर्धूतद्वय-
शोक विमोहं बुद्धंबुद्धेरंतःस्थं

सत्तामात्रशरीरं प्रणमतगो-
विन्दं परमानन्दम् ॥ ६ ॥

स्नानार्थं जल क्रीडार्थं व्याकुलाः संभ्रांता यायोषित स्तसां वस्त्र मुपादाय स्वीकृत्य अगं वृक्षं आरूढं (वल्ली कदंबवृक्ष मधिरूढ मच्युत मित्या) गमवचनात् कीदृग्विधा इत्याह । दिग्वस्त्राः दिगंवरा अतएव वस्त्रं व्यादित्संतीः विशेषेणा दातुमिच्छंती स्ता-योषितः उपसमीपे आकर्षंतं स्वनिकटे चानयंतं तर्हि स्त्रीलं पटत्वाद संपूर्णकाम इत्यत आह निर्धूतेति नित रामत्यंतं कंपिताद्वयशोकमोहायेन स तथोक्तः द्वयं रागद्वेषादिकं शोकश्च विषयालाभ जनित दुःखं

मोहश्च शोकादि हेतुः एतेसर्वे निर्धूतायेन अतश्चायं विषलंपटो न भवतीत्याह बुद्ध मिति बुद्धं प्रबुद्धं अप्रबुद्धानां हिविषय पार वश्यं नतुप्रबुद्धस्येत्यर्थः मन सस्तुपराबुद्धि र्योबुद्धेःपरतस्तुस इति भगवद्वचनात बुद्धेर प्यंतः स्थं तत्साक्षितया स्थितं सत्तामात्र शरीरं सदेव सौम्ये द ममासीदिति श्रुतेः सत्तामात्रविग्रहं प्रणमतेत्यन्वयः ॥ ६ ॥ परि-त्राणाय साधूनामिति भगवद्वचना ल्लोकर-क्षणार्थं यदुकुले वतीर्णं गति प्रसन्नं परम मंगलरूपं परमात्मानंच स्तौति कांतमिति ।

कांत कार [illegible] कारणमादिम

नादिं [illegible]ल घनाभासं कालिं

दीगत कालियशिरसि नृत्यं तं मुहुर्नृत्यंतम् कालंकाल कलातीतं कलिताशेषं कलि दोषघ्नं काल त्रयगतिहेतुं प्रणमतगोविंदंपरमानंदम् ।७।

(आर्द्रेक्षु चाप शबलं बित पुष्पबाण मार क्तनेत्र मपरेधृत शंखचक्रम् । विन्यस्तवेणव मधरेस्व निनादयंतंसं मोहयंत शिवपाश स्तृणीवहंत) मिति रहस्यागम वचनात् कांतं कमनीय मत्यंतसुंदरं। (कदाचिद्योगललितः पुरुषः कृष्णविग्रहः) वंशनाद विनोदेन करोतिविवशं जगत् । (योयंचकास्ति गगनार्णव

रत्नमिद्व योयंस्त्वरासुर गुरु पुरुषः पुराणः । यद्दाम मर्धमिद मंधक सूदनस्य देवि त्व-मेव तदिति प्रतिपादयंते) स्तित्रिपुर स्वंदर्या वतारमित्यर्थः ॥ मायां तुप्रकृतिं विद्यान्मा यिनं तुमहेश्वर मिति श्रुतेः कारणस्य प्रकृ तेरपि कारण मधिष्ठान भूतं ब्रह्मवाइदम ग्रा-सीत् सदेव सौम्येदमग्रासीततस्मादात्मनः आकाशः संभूतः इत्यादि श्रुतिभ्यः आदिं जगदुपादानं स्वयंचानादिं आदि कारणं न विद्यते यस्य सतथोक्तस्तं स्वतः सिद्धमि-यर्थः उपासना समये काल घनाभासं(कृष्ण वर्णं कलौयुगेति) वचना न्नीलमेघ वर्णमि त्यर्थः कालिंदी यमुना तद्गतस्य कालियना गस्य शिरसि मुहुर्मुहुर्नृत्यंत मतिशयेन

सुष्टुनृत्यतं । कालोस्मि लोकक्षय कृत्प्रवृद्धो लोकां समाहर्तु मिहप्रवृत्त इति भगवद्वचना त्कालं कालात्मकं संहर्तारं स्वयंतु काल कलातीतंकालो भूत भविष्यद्वर्तमानलक्षणः कालश्च निमेष कालादि प्रभृतयः कालं कलाश्च अतीत्य वर्त्ततेति कालकला तीतः अत्यतिष्ठद्दशांगुल मतोज्यायांश्च पूरुषः ॥ अन्यत्र धर्मादन्यत्रा धर्मादन्यत्रा स्मत्कृता कृता दन्यत्रभूताद्भव्या च्च यत्तत्पश्यसि तद्वद । अन्यदेवतद्विदिता दथो विदिता दधि इतिश्रुतेः कार्य कारण संघात रहित मिति भावः तथापि संसाराव स्थायां कलिताशेषं तस्यवाक्कंत्य नामानि दामानि तदस्येदंवा चातंत्या नाम भिर्दामभिः सर्वंसित मिति

श्रुतेः) कलिता बद्धा अशेषाः जीवायेन सक लिका शेषजनमभक्तानां भवहेतु मित्यर्थः भक्तानां बंधनिवर्तक मित्याह कलिदोषघ्न मिति । कलौकाले येदोषा विहितऽकरण प्रतिषिद्धकरणलक्षणा स्तान् स्मरण मात्रे णहंति नाशयतिकलि दोषघ्नं । (कलावत्यंत दोषाढ्यो विषयासक्तमानसः । कृत्वातुसक लंपापं गोविंदस्मरणाच्छुचिः) । (अतिपाप प्रसक्तोपिध्यायन्निमिषमच्युतम् । भूयास्त पस्वी भवति पंक्ति पावन पावनः) (शाठ्येनापि नमस्कारःप्रयुक्तश्चक्र पाणये संसारस्थूल बंधाना मुद्वेजन करोहिसः ) इतिपुराणवच नात् । कलिमला पह मित्यर्थः काल त्रयस्य संध्यात्रयस्य हेतुं प्रणमतेत्यन्वयः ॥ ७ ॥

नारदा दया शेवगीर्वाण वृन्दास्तिष्ठति यत्र तद्वृंदावनतत्स्थं गोविंदंस्तौतिवृंदावनेति ॥

वृन्दावन भुवि वृन्दारकगण वृन्दाराधितवंदेहंकुंदाभामल मंदस्मेरसुधानन्दं सुहृदा- नंदम् वंद्याशेष महामुनि मानसवंद्यानंदपदद्वंद्वं वंद्याशेष गुणाब्धिं प्रणमतगोविंदं पर- मानंदम् ॥ ८ ॥

वृंदावनभुवि वृंदारण्य प्रदेशे रासक्रीडा यांप्रवृत्तायां वृंदारकाणां गणाः देवगणास्ते

षांवृंदं समूह स्तेनाराधितां पूजिता वंद्या-श्लाघनीया ईहा चेष्टाक्रीडां यस्य सतथो क्तस्तं कुंदाभं कुंदवल्लीला कुसुमस्येवाभा कांतियस्य स कुंदाभः अमल मंदस्मेरश्चेति कुंदाभामल मंदस्मेरः स एव सुधा पीयूषं कुंदाभामल मंदस्मेर सुधा तयाविर्भूत आ नंद विशेषो यस्य सतथोक्त स्तं स्वहृदानंद मिति स्वहृदां स्वच्छ चित्ताना मानंदमु क्तानां निर्वाणस्वख मित्यर्थः वंद्येति वंद्या अशेषा महामुनयश्चेति वंद्याशेषमहा मुन योनारदाद्या स्तेषां । मानस वंद्यानंद पद द्वंद्वं वंद्याशेष गुणाब्धि प्रणमत मानसे हृद येन वंद्यंध्येय मानंद प्रदंपद द्वंद्वं यस्य सत थोक्तस्तं वंद्याश्चतेऽशेषगुणाः शांत्यादय-

श्चेति ते आध्रीयंते आसमंताद्धीयंते येन भक्तेभ्यः प्राप्यते नेनेति वंद्याशेष गुणाब्ध प्रणमतेति मध्यम पुरुष बहुवचनं लोकशिक्षार्थम् ॥ ८ ॥यस्त्वेत द्गोविंदाष्टकमनुदिनं पठतीति स कामश्चे त्काम्यमानंफलमुपैति निष्कामो मुक्तिमुपैति इति स्तोत्रपाठकानां फलं कीर्तयति गोविंदेति ॥

गोविन्दाष्टकमेतदधीते गोविन्दार्पितचेतायोगोविंदाच्युतमाधवविष्णो गोकुलनायककृष्णेतिगोविन्दांघ्रि-सरोजध्यानसुधा जलधौत

समस्ताघोगोविन्दं परमा-
नंदामृतमंतस्थं समभ्येति ॥८॥

यस्तु निरन्तरं गोविन्दार्पितचेताः संने- तद्गोविन्दाष्टक मधीते गोविन्दाच्युत माधव विष्णोगोकुल नायक कृष्णेत्येतानि नामानि कीर्तयन् गोविन्दाङ्घ्रिध्यान स्वधा जलधौत समस्ताघः प्रक्षालिताशेष पापौघो भत्वा गोविन्दं परमानन्दामृतं मरणादि धर्मरहित मंतस्थं समभ्येति सत्यं निरुपद्रव स्थानमाप्नोति । देवांदेवयजोयांतिमद्भक्ता यांतिमाममीतिभगवद्वचनात् ।

पश्यत बलमबलानामना-

बिलेहृद्बिलेवबन्धुर्या । तनु
हृष्ठिपातरम्या क्राष्टममूर्तं
परब्रह्म ॥

इति गोविन्दाष्टक टिप्पणमानन्दगिरि
कृतं समाप्तम् ॥ हरिः ओं ॥

---

# अथ मुकुन्दमाला

वन्दे मुकुन्द मरविन्ददलायताक्षं कुन्देंदुशंख दशनं शिशुगोपवेशम् । इन्द्रादिदेव गण वन्दित पादपीठं वृन्दाबनालयमहंवसुदेव सूनम् ॥ १ ॥ जयतु जयतु देवो देवकीनन्दनोयं जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः । जयतु जयतु मेघश्श्यामलः कोमलांगो जयतु जयतु पृथ्वी भारनाशोमुकुंदः ॥ २ ॥ मुकुंदमूर्धना प्रणिपत्ययाचे भवन्तमेकांतमियन्त मर्थम् । अविस्मृतिस्त्वश्चरणाविन्दे भवे भवे मेस्तुभवत्प्रसादात्॥३॥ श्रीमुकुंदपदांभोज मधुनः परमाद्भुतम् [illegible]

यिनो नमुह्यंति मुह्यंति यदपायिनः ॥ ४ ॥
नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वंद्वहेतोः कुंभीं
पाकं गुरुमपिहरे नारकं नापनेतुम्। रम्या
रामा मृदुतनलता नन्दनेनापिरन्तुं भावे
भावे हृदयभवने भावयेयं भवन्तम्॥ ५ ॥
नास्थाधर्मे नवसु निचये नैवकामोपभोगे
यद्यद्भव्यं भवतु भगवन्पूर्वकर्मानुरूपम् ।
एतत्प्रार्थ्यं ममबहुमतं जन्म जन्मान्तरेपि
त्वत्पादांभोरुह युग गता निश्चला भक्ति
रस्तु ॥ ६ ॥ दिविवाभुविवाममास्तुवासो
नरकेवा नरकांतक प्रकामम्। अव धीरित
शारदारविन्दौ चरणौते मरणेपि चिन्तयामि
॥७॥सरसिजनयने सशंखचक्रे मुरभिदिमा-
विरमेहचितरंतुम्। सुखतरमपरंनजातुजनो

हरिचरणस्मरणामृतेनतुल्यम् ॥ ८ ॥ माभैर्मन्दमनोविचिन्त्यबहुधायामीश्चिरंयातना नामीनः प्रभवंतिपापरिपवः स्वामी ननुश्रीधरः। आलस्यंव्यपनीय भक्ति सुलभं ध्याय स्वनारायणं लोकस्य व्यसना पनोदनकरोदासस्य किंन क्षमः ॥९॥ भवजलधिमगाधं दुस्तरं निस्तरेयं कथमहमितिचेतो मास्मगा कातरत्वम् । सरसिजदृशिदेवेतावकीभक्तिरेका नरक भिदिनिषण्णा तारयिष्यत्यवश्यम् ॥ १० ॥ तृष्णा तोयेमदन पवनोद्धूतमोहोर्मिमाले दारावर्ते तनयसहजग्राहसंघाकुले च । संसाराख्येमहति जलधौ मज्जतां नस्त्रिधामन्पादांभोजे वरद भवतो भक्तिनावे प्रसीद ॥११॥ पृथ्वीरेणुरणुःपयांसिकणिकाः

फल्गुः स्फुलिंगोलघुस्तेजोनिश्वसनं मरुत्त-
नुतरं रंध्रं सूक्ष्मं नभः। क्षुद्रारुद्र पितामहा
प्रभृतयः कीटासमस्ता सुराद्दृष्टे यत्र सता
वको विजयते भूमा वदूतावधिः ॥ १२ ॥
आम्नायाभ्यसितान्यरण्यरुदितं कृच्छ्रव्रता
न्यन्वहं मेदश्छेदफलानि पूर्तविधयःसर्वेहुतं
भस्मनि। तीर्थानामवगाहनानिच,गजस्नानं
विनायत्पद द्वंद्वांभोरुहसंस्तुतिं विजयते देवः
सनारायणः ॥१३॥ आनन्दगोविन्द मुकुन्द
राम नारायणानन्तनिरामयेतिवक्तुं। समर्थोपि
नवक्ति कश्चिदहो जनानां व्यसनानि
मोक्षे ॥ १४ ॥ क्षीरसागर तरङ्ग शीकरा
सार तारकित चारुमूर्तये। भोगिभोगशयनी
यशायिने माधवाय मधुविद्विषेनमः ॥१५॥

वात्सल्यादभय प्रदानसमया दार्तार्तिनिर्वा-
पणादौदार्यादघ शोषणादगणितश्रेयः पद
प्रापणात्।सेव्यःश्रीपतिरेव सर्वंजगतामेक्ता
ततःसाक्षिणःप्रह्लादश्चविभीषणश्चकरिराड्
पञ्चाल्यहल्याध्रुवः ॥ १६ ॥ नाथेश्रीपुरुषो-
त्तमेत्रिजगता मेकाधिपेचेतसा सेव्येस्वस्य
पदस्यदातरिपरेनारायणेतिष्ठति। यंकं चि-
त्पुरुषाधमंकतिपय ग्रामेशमल्पार्थदं सेवायै
मृगयामहे नरमहो मूढावराकावयम् ॥१७॥
हेलोकाःशृणत प्रसूतिमरणव्याधेश्चिकित्सा
मिमां योगज्ञः समुदाहरन्ति मुनयोयांया
ज्ञवल्क्यादयः। अन्तर्ज्योतिरमेयमेकममृतं
कृष्णाख्यमापीयतांतत्पीतंपरमौषधं वितनुते
निर्वाणमात्यन्तिकम् ॥ १८ ॥ वक्त्रेनांज-

लिना नतेन शिरसा गात्रैःसरोमोद्गमैःकंठेन
स्वरगद्गदेननयनोद्गीर्णेनबष्पांबुना। नित्यं
त्वच्चरणारबिन्दयुगलध्याना मृतास्वादिना
मस्माकं सरसीरुहाक्षसततं सम्पद्यतांजीवि
तुम् ॥ १९ ॥ तत्वं ब्रुवाणानि परंपरस्मादहो
क्षरंतीव सुधांपदानि। आवर्तय प्रांजलिरस्मि
जिह्वे नामानिनारायणगोचराणि ॥ २० ॥
इदं शरीरं परिणाम पेशलं पतत्यवश्यंश्लथ
सन्धिजर्जरम्। किमौषधैःक्लिशस्यमूढदुर्मते
निरामयं कृष्णरसायनं पिव ॥ २१ ॥ श्रीम-
न्नामप्रोच्य नारायणाख्यंकेनप्राप्तावांछितं
पापिनोपि। हानःपूर्ववाक्प्रवृत्तानतस्मिस्तेन
प्राप्तं गर्भवासादि दुखम् ॥ २२ ॥ माद्राक्ष
क्षीणपुण्यां क्षणमपिभवतो भक्तिहीनान्पदां

श्जे माश्रौषं श्राव्यबद्धं तवचरित मपास्या न्यदाख्यान जातम्। मास्म्राक्षं माधव त्वाम पिभुवनपते चेतसा पह्नवानं माभूवंस्वत्स- पर्या व्यतिकर रहितो जन्म जन्मांतरेपि ॥ २३ ॥ मदन परिहर स्थितिंमदीये मनसि मुकुंद पदारबिंदधाम्नि। हरनयन कृशानुना कृशोसि स्मरसि न चक्र पराक्रमं मुरारेः ॥ २४ ॥ दारावारा करवर सुतातेङ्ग जोयं विरिंचिः स्तोता वेदास्तव सुरगणो भृत्य- वर्गःप्रसादः। मुक्ति र्मध्येजगद विकलं ताव कीदेवकीति माता मित्रंबलरिपु सुतस्तत्व तोन्यन्नजाने ॥ २५ ॥ जिह्वे कीर्तय केशवं मुररिपुं चेतोभजश्रीधरं पाणिद्वंद्व समर्चया च्युतकथा श्रोत्रद्वयत्वंश्रृणु। कृष्णं लोकयलो

चनद्वयहरेर्गच्छ्रांघ्रियुग्मालयं जिघ्रघ्राण
मुकुन्द पाद्तुलसीं मूर्धन्नमाधोक्षजम् ।२६।
यत्कृष्ण प्रणिपात धूलिधवलं तद्वैशिरः स्या
च्छुभं तेनेत्रे तमसो ज्जितेसु रुचिरे याभ्यां
हरिर्दृश्यते। सान्बुद्धि नियमै र्यमैश्च विमला
या माधव ध्यायिनी साजिह्वा मृतवर्षिणी
प्रतिपदं या स्तौतिनारायणम् ॥ २७ ॥ भक्त
द्वेषिभुजंग गारुडमणि स्त्रैलोक्यरक्षा मणिः
गोपीलोचन चातकां बुदमणिः सौन्दर्यमुद्रा
मणिः। श्रीकांता मणिरुक्मिणी घनकुचद्व-
न्द्वैक भूषामणि श्रेयोध्येय शिखामणि र्दिश
तुनो गोपाल चूडामणिः ॥ २८ ॥ शत्रुच्छे
दैकमंत्रं सकलमुपनिष द्वाक्य संपूज्यमंत्रं
संसारो च्चारमंत्रं समुदित तमसां संघनिर्या

णमंत्रम्। सर्वैश्चर्यैक मंत्रं व्यसन भुजगसं-
दष्ट संत्राणमंत्रं जिह्वे श्रीकृष्ण मंत्रं जप
जप सततं जन्मसाफल्यमंत्रम्॥२९॥ व्या-
मोहोद्दलनौषधं मुनिमनो वृत्तिप्रवृत्त्यौषधं
दैत्यानर्थकरौषधं त्रिभुवनेसंजीवनैकौषधम्।
भक्तार्तिप्रशमौषधंभवभय प्रध्वंसि दिव्यौ
षधं श्रेयः प्राप्तिकरौषधं पिवमनः श्रीकृष्ण
नामौषधम्॥ ३०॥ आश्चर्य मेतद्धि मनु
ष्यलोकेसुधांपरित्यज्यविषंपिवंति। नामानि
नारायण गोचराणि त्यक्तवान्य वाचः कुहका
पठंति॥ ३१॥ लाटीनेत्र पुटी पयोधरघटी
क्रीडाकुटी दोस्तटी पाटीर द्रुमवर्णनेनक
विभि र्मूढैर्दिनंनीयते। गोविंदेतिजनार्दनेति
जगतां नाथेति कृष्णेतिच व्याहारैः समय

स्तदेक मनसां पुंसां परिक्रामति ॥ ३२ ॥
अयाच्यमक्रेय मयातयाम मयाच्य मक्षय
मदुर्भरमे। अस्त्येवपाथेयमति प्रयाणेश्रीकृ
ष्णनामामृत भागधेयम् ॥ ३३ ॥ यस्यप्रियौ
श्रुति धरौरवि लोक गीतौ मित्रेद्वि जन्म
परिवार शिवावभूताम्। तेनांबुजाक्ष चरणां
बुजषट् पदेन राज्ञाकृता स्तुतिरियं कुलशे
खरेण ॥ ३४ ॥

इति श्रीकुलशेखर विरचित मुकुन्दमाला
स्तोत्र संपूर्णम् ॥

# ॐ अथरासक्रीडास्तोत्रम्

अंगना मङ्गना मन्तरे माधवो माधवंमाधवं चान्तरेनाङ्गना । इत्थमा कल्पितेमंडले मध्यगः संजगौवेणुना देवकीनंदनः ॥ १ ॥ बालिका बालिका तालली ला लया सङ्गसंदर्शिता भ्रूलता विभ्रमाः । गोपिका गीतदत्तावदानः स्वयं संजगौ वेणुना देवकीनन्दनः ॥ २ ॥ कापिवीणा भिरामं स्वरंगायती कापिवीणा रणत्कंकणं नृत्यती । कापिश्रृङ्गारहारा वली रंजिता । संजगौ ॥ ३ ॥ कोकिकेकाकुता तङ्क पङ्केरुहा लीनहंसावली ह्लादनिर्ह्लादते । शीत शेतावटेयामुनेये तटे संजगौवेणु ॥ ४ ॥ मौलिमंदार माला मिलद्भृ

ङ्गिका भीतभीता प्रियाविभ्रमा लिङ्गिता।
त्रस्तगोपीकुचा भोगसंमर्दिता संजगौवेणुना
॥ ५ ॥ चारु चामीकरा भासिता साविभौ
वैजयंती धृतावासि तोरस्थला । नंदवृंदावने
वासितो मध्यगः संजगौवेणु ॥ ६ ॥ चारु
चंद्रावलीलोचनाचुंबितो गोपगो वृन्दगोपा-
लिकावल्लभः। कंसवंशाटवीदाह दावानला
संजगौ ॥ ७ ॥ पारिजातं समुद्धृति राधा
वरो रोपया भासभामा भयादङ्गने वल्लवी
वृन्दवृन्दा रिकाकामुकः संजगौ वेणुना देव
की नंदनः ॥ ८ ॥

इतिशंकराचीर्य विरचितं रासक्रीडास्तो
त्रम् संपूर्णम् । हरिः ओं ॥

---